REPRINT FROM THE PANDIT.

॥ श्रीः ॥



# वेदार्थसंग्रहः ।

वेदान्तप्रकरणग्रन्थः ।

श्रीभाष्यकारेण श्रीमता भगवद्रा-
मानुजाचार्येण प्रणीतः ।

सत्संप्रदायाचार्यपण्डितस्वामिश्रीराममिश्रशास्त्रि ।
वेदव्यासापरनामधेयश्री ६ सुदर्शनसूरिप्रणीत-
तात्पर्यदीपिकाख्यव्याख्यया संवलितः ।

स. सं. पं. स्वा. श्रीराममिश्रशास्त्रिणा संशोध्य मुद्रितः ।

# VEDARTHA SAMGRAHA

WITH THE GLOSS CALLED TATPARYADIPIKA

BY SUNDARSANASURI

BY S. SUM. P. S. RAMA MISRA SASTRI
PROFESSOR, SANSKRIT COLLEGE, BENARES.

PUBLISHER : DR. JAGANNATH PRASAD M. B. B. S.
PROPRIETOR E. J. LAZARUS & CO.'
BOOKSELLERS AND PUBLISHERS.
52, Benares Cantt.
PRINTER—SHIVA RAMA PROPRIETOR THE NATIONAL PRESS
52, BENARES CANTT.
SECOND EDITION 1924





काश्याम् ।
दी नेशनल प्रेस-नामकमुद्रालये मुद्रयित्वा प्रकाशितः ।

# भूमिका ।

॥ श्रीमते रामानुजाय नमः ॥

सगु*णविद्यैव विद्या, देशविशेषा†वच्छिन्नः श्रीपतिरेव प्राप्यः प्रापकश्च, तत्प्रपत्तिरेव ‡परमोपायस्सा च ज्ञानसाध्या, तच्च ज्ञानं भक्त्युपासनादिपदव्यपदेश्यं सगुणविद्यास्वरूपमेव, सर्वास्वप्युपनिषत्सु विदिनोपक्रम्योपासिनोपसंहारदर्शनादुपासिनोपक्रम्य विदिना चोपसंहरणात् । न च विद्यनुरोधादुपासिरेव विद्यर्थ इति वाच्यम् उपासनाया विशेषज्ञानरूपतया तदनुरोधेन सामान्यार्थकस्य विदेरेव तदर्थकतायाः समुचितत्वात् । एतत्तत्त्वं चान्तः प्रविश्य विवेचितमस्माभिः स्वीयब्रह्मसूत्रवृत्ताविति ततो द्रष्टव्यम् । भक्तिश्च—वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ॥ ईत्युक्तरीत्या न संन्यासनियता, नापि यत्किञ्चिदेकवर्णनियता, किन्तु स्वस्ववर्णाश्रमनियता कर्माङ्गकं§ ज्ञानमेव ज्ञानं न तु नैष्कर्म्यं, नापि ज्ञानकर्मणोः समसमुच्चयः इत्याद्यर्थजातनिरूपणपरां ब्रह्मसूत्रचतुरध्यायीं व्याख्यातृदोषदूषितामुपलभ्य सूत्राक्षरार्थनिरूपणपराः टङ्क-द्रमिड-मारुचिप्रभृतयः पूर्वोक्तार्थप्रतिपादनैदम्पर्येण वाक्य-भाष्यादिग्रन्थान् रचयाञ्चक्रुर्बोधायनीयवृत्तिमनुसरन्तः । निरास्थँश्च शतधा सहस्रधा श्रुत्या युक्त्या च निर्विशेषब्रह्मवादं, नैष्कर्म्यवादं, जगन्मिथ्यात्ववादं, भक्तिनिरपेक्षज्ञानमात्रान्मोक्षवादं, विश्वसृजोऽपारकल्याणगुणाकरस्य स्वाभाविकज्ञान–क्रिया–बलैश्वर्यसंपन्नस्य नैर्गुण्यवादं, सर्वात्मैक्यवादं, देवतात्मैक्यवादं, त्रिकैक्यवादं, त्रिकतुल्यतावादमित्येवमादिमोक्षप्रतिद्वन्द्विवादजातम्, अपूपुषँश्च प्रतिपिपादयिषितं वैदिकमर्थजात-

---

* विद्ययोः परापरविभागस्तु ब्रह्मप्रापकत्व-तदप्रापकत्वाभ्यामिति, सर्ववेदान्तार्थनिष्कर्षणमुखेन प्रत्यपीपदाम ब्रह्मसूत्रवृत्तिषु ।

† कौषीतक्युपनिषदि सुस्पष्टमिदम् ।

‡ स्वभ्यस्तगीतार्थाः घञ्जसा श्रद्दधते ।

§ यथाहुराचार्याः ब्रह्मप्राप्त्युपायश्च शास्त्राधिगततत्त्वज्ञानपूर्वकस्वकर्मानुगृहीतभक्तिनिष्ठा—साध्यानवधिकातिशयप्रियविशदतमप्रत्यक्षतापन्नानुध्यानरूपपरभक्तिरेवेति ॥

मिति न किंचिदवशिष्टं विशिष्टं येन ग्रन्थारम्भः सफलस्सम्भाव्येतापि । मोक्षस्य घण्टापथस्वरूपो भक्तिमार्गस्तु स्ववर्णनियताचरणप्रदर्शनपुरस्कारेण सम्यगवगमितो वकुला* भरणमुनिभिः । ते हि युगह्रासानुरूप्येण चतुर्थवर्णे स्वजनिमवलम्ब्य (शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे) इति सनत्सुजातीये विदुरोक्त रीत्या कार्यविशेषप्रसाधनाय स्वपरिगृहीताद्विजयोन्यनुसारेण वेदाक्षराण्य संगिरमाणा दध्नोघृतमिव सस्मृतीतिहासपुराणानां सशिरस्कवेदानां भवान्तराधिगतज्ञानतया वा भगवदवतारतया वा, प्रातिभप्रतिभानभासितार्थतया वा सारमुन्मथ्य सुप्राचीनद्राविडभाषयैवोपनिबबन्धुः । ता हि भवभयाभितप्ताः सारमाद्रित्समानाः सुखमासेवन्ते, अभिदधते च-द्राविडोपनिषदः-इति ताभिरमूभिर्भिर्वेदार्थनिष्कर्षणमुखेन जिज्ञासवो द्विजाः, अद्विजाश्चोपकारमुपयापिताः । तथाऽपि बोधायनीयवृत्तेरतिविस्तरेण विलोपात्--टङ्काचार्यनिर्मितवाक्यग्रन्थस्यातिविस्तरतया, द्रमिडा†चार्यभाष्ये चाधुनिकीनां शङ्कराचार्य--यादवाचार्य--भास्कराचार्यादिभिः स्वमत्युत्प्रेक्षितानामनल्पसार‡युक्तीनामनिराकरणाद् द्राविडोपनिषदां चातिप्राचीनभाषानिबद्धतया सर्वानुपकारकत्वाद् वेदार्थसंग्रहं नाम ग्रन्थं जग्रन्थुराचार्याः । तदिदं ग्रन्थरत्नं प्रथमतो-निर्माय आचार्यास्तस्य याथार्थ्यनिर्णयाय वेङ्कटाद्रिनाथं भगवन्तं विष्णुमर्पयाञ्चक्रुः—यथोक्तं टीकाकृतैव—श्रीभाष्यकृदुपन्यस्तो यः श्रीशैलपतेः पुरः । वेदार्थसंग्रहस्यास्य कुर्मस्तात्पर्यदीपिकाम् ॥ इति, स च भगवानस्य ग्रन्थरत्नस्य साक्ष्ये प्रत्यक्षतामाप इत्यलौकिकममुं

* वकुलाभरणपदेन श्रीशठकोपाचार्या विवक्ष्यन्ते, ते हि भगवतः श्रीकृष्णस्य तेनाहं गुणपात्रेण श्रीनिवासेन साम्प्रतम् । शोचामि रहितं लोकं पाप्मना कलिनेक्षितम्—इति श्रीभागवतोक्तरीत्या भगवत्पादपरिष्वङ्गविमुखे पृथ्वीपरिष्वङ्गे जाते दशादिनान्यतीत्य समुत्पेदिरे रचयाञ्चक्रुश्च सहस्रगीतीः सर्वशास्त्रार्थसारगर्भा अतिप्राचीनतामिलपदवाच्यभाषयेति ॥

† द्रमिडभाष्यं तु सुप्राचीनमेतेभ्यः अत एव शाङ्करोपनिषद्भाष्ये सूत्रभाष्येऽपि च तन्मतमनुरणितम् ।

‡ इदमनल्पसारत्वाभिधानं भाषामपेक्ष्य ।

व्यापारमवलोक्य तदानीन्तनैरमत्सरैराचार्यैः श्रीरामानुजाचार्याः ब्रह्मसूत्रेषु भाष्यनिर्माणाय भृशमभ्यार्थिषत । तेऽपि चासेतुहिमाचलमचञ्चलस्वप्रचारानवरुद्धसर्वदिङ्मण्डलानुपाधिवाद-मायावाद-ब्रह्माज्ञानवादान् विततगहनकुहनाकषायदुर्युक्तिमार्गान् बहुशाखप्रशाखान् बौद्धादिपक्षनिराकरणपराणां*श्वश्रूभिक्षाप्रतिक्षेपप्रायाननन्यनिरसनीयानवधूत्याचार्याणां प्रार्थितार्थसिद्धये प्रसेदुः ।

स्फुटमिदमेतेन यदयं वेदार्थसंग्रहः श्रीभाष्यात्पूर्वमेव ग्रन्थित इति । श्रीभाष्ये तत्र तत्र वेदार्थसंग्रहनामोल्लेखादनुल्लेखाच्च वेदार्थसंग्रहे श्रीभाष्यनाम्नोऽपि चायमर्थः सिध्यति ।

यद्यपि वेदार्थसंग्रहप्रतिपाद्याः प्रतिक्षेप्याश्चार्था भगवद्भिर्यामुनाचार्यपादैः सिद्धित्रयेऽभिहिताः प्रतिक्षिप्ताश्च, तथाऽपि तत्रास्ति तादृशोऽर्थसंक्षेपो येन तत्र परमनिपुणानामेवोपकारसंभवोनेतरेषामिति न तेनोप्यस्य गतार्थतेत्यालोच्य जिज्ञासुजनसौकर्याय अस्यापूर्वव्युत्पादकस्य ग्रन्थस्य प्रकाशने प्रवृत्तिस्साधीयसीति । आशासे च कलावपि बलादेतेन भगवति समुत्पन्नभक्तिशेमुषीका जनाः सहसा संसारतापान् जह्युरिति ॥

---

* सततकलहप्रिये आस्तां केचित् श्वश्रू-स्नुषे तयोरादिमा गृहमपहाय गृहान्तरं गता तदानीमेव कश्चन भिक्षुर्भिक्षार्थी स्नुषया भिक्षां न दास्यामि याहीति प्रत्युक्तः, तेन भिक्षुणा मार्गे संमिलिता श्वश्रूर्लब्धभिक्षोऽसीति पृष्टवती स तु विनीतो नेत्युवाच, तं च सा आयाहि गृहमित्युदितवती स तु समुत्पन्नाधिकतृष्णस्तदभ्यर्थनया तया साकमेव पुनर्गृहमायातस्तदा सा श्वश्रूः स्नुषां प्रहरं यावदधिक्षिप्तवती का भवती यया ह्यस्समायातया गृहस्वाम्यकामया मयि ध्रियमाणायामेव भिक्षुः केवलं कणान् कामुकोविमुखीकृत इत्यादिदुर्वादजातं सरोषहुङ्कारमवादीत् इदं सर्वमवलोक्य समुत्पन्नाधिकभिक्षाशो भिक्षुश्चिरं तस्थौ, न च सा तं किमप्युक्तवतीति स स्वयमेव मातरहं प्रतीक्षे यावदाज्ञां भवत्या इति व्याजहार । तं चैवं वदन्तं सा परमकार्पण्या चण्डी साधो प्रभो भिक्षुवर याहि याहि क्षमस्व त्वरस्व मा विलम्बस्व नाहं भवन्तं भिक्षां दातुं प्रत्यावर्तितवती कालविलम्बक्लेशं चान्वभवं, किन्तु परमकृपणप्रकृतिमनभिजातां दरिद्रोदर-

हारीताऽन्वयसंभवस्य श्रीद्केशवसोमयाजिनो द्राविडब्राह्मणस्य सुतः श्रीद्कान्तिमतीगर्भसंभवः श्रीमानयमस्मदीयो मुमुक्षुजनजीवातुः परमाचार्यः श्रीद्रामानुजाचार्यः—मेषे चैत्रे शुक्लपक्षे पञ्चम्यां गुरुवासरे। मध्याह्ने कर्कटे लग्ने नक्षत्रे रुद्रदैवते ॥ इति रुद्रदैवते पुनर्वसौ मद्रासप्रान्ते भूतपुर्यां वेदार्थसमुद्धरणाय जनिं लेभे । आसीदसावविकलः शेष इति कृतसुकृतसहस्राः परिमृष्टमतयः श्रद्दधते ।

आचार्याणां मातुलाः श्रीरामायणार्थोपदेष्टारो गुरवश्च श्रीद्शैलपूर्णाचार्याः । महापूर्णाः समाश्रयणगुरवः । गोष्ठीपूर्णा रहस्यार्थोपदेशाचार्याः । अमीषां सर्वेषामपि गुरवोभगवन्तो यामुनाचार्याः, तदाचार्याः श्रीद्राममिश्राचार्याः । तदाचार्याः श्रीद्पुण्डरीकाक्षाः । श्रीद्रामानुजाचार्यप्रणीता ग्रन्थाः—श्रीभाष्यं, वेदार्थसंग्रहः, वेदान्तसारग्रन्थः, वेदान्तदीपः, गीताभाष्यं, नित्याराधनविधिः । श्रीगद्यम्, शरणागतिगद्यम्, वृहद्गद्यमित्येते ज्ञायन्ते। श्रीद्रामानुजाचार्याः कदाऽवतेरुः किमकार्षुः कस्मादपाठिषुः, के कति च तेषां शिष्या अभूवन्निति, कियन्तमनेहसमवात्सुः कुत्र चेति । कियन्तं कालं गार्हस्थ्यमवालम्बिषत, कस्य हेतोः कदा च संन्यास्थन्नित्यादि सर्वं निरूपितमस्माभिराचार्यपरिचर्यायामिति तत्र द्रष्टव्यम् ।

---

दरीद्रम्भवामिनां गृहस्वाम्यकामां स्नुषां दर्शयितुं निजाधिकारवैभवं, यद् भर्तृगृहे कर्तुमकर्तुमन्यथा वा कर्तुमहमेव प्रभवामि न भवतीति । कथमसावनपनीतोद्वाहमङ्गलकङ्कणा कंचिद् भिक्षुमपि भिक्षायै नेति वदेत् नेत्यपि वदेयं चेदहं सा गृहस्वामिनीति । इदं श्वश्रूभिक्षाप्रतिक्षेपन्यायशरीरं, तदत्र बौद्धपक्षप्रतिक्षेपकृतपरिकरैः कैश्चिदाचार्यवर्यैरयमेव न्यायाशयोऽन्वकारि । बौद्धेषु योगाचाराः—इदं बाह्यं जगज्जातं क्षणिकविज्ञानात्मन्येव प्रविष्टं नेतोऽतिरिक्तो नाम कश्चनानुभवनीयोऽनुभव एव तु रूपविशेषापन्नोऽनुभवनीयतामापेत्य तिष्ठन्ते तदिदं योगाचारमतं ब्रह्मसूत्रेषु प्रतिक्षिप्तं तदेव च कैश्चिदमीभिर्वैदिकवेषैर्दृष्टिसृष्टिवादं हस्तयद्भिर्हठादवलम्बितमिति परिहसन्ति सन्तः । तत्साधु समर्थितं श्वश्रूभिक्षाप्रतिक्षेपप्रायान् वादानिति । सर्वथा निर्विशेषब्रह्मवादश्च यथा माध्यमिकसर्मनीषितमर्थजातमनुकरोति तथा प्रत्यपीपदाम ब्रह्ममीमांसासूत्रेष्विति तत्रैव द्रष्टव्यम् ।

* आत्मसिद्धिः, संवित्सिद्धिः, स्वप्रकाशसिद्धिरिति त्रयी सिद्धीनाम् ।

श्रीभाष्यस्यातिगहनगभीरार्थगर्भतया तदर्थेषु बुद्ध्यवतरणार्थं लोकसौकर्यार्थं च वेदार्थसंग्रहमुद्रणेऽपि अव्याख्यस्यास्य मुद्रणे नोद्देश्यसिद्धिर्जनानामेतदुदितार्थातिवैदूशिकत्वादित्यनुसन्धाय विधाय च मतिपङ्गूनां स्खलनसम्भवस्थलेषु वैशद्यमियं **तात्पर्यदीपिका स्नेहपूर्तिपूर्णा** जनाज्ञानतमस्तिरस्करणाय विष्णवे समर्पिता । एतस्यास्तात्पर्यदीपिकाख्यव्याख्याया रचयिता च सुप्रौढपाण्डित्योऽतिविस्पष्टत्वरस्वकीर्तिकिरणधवलीकृतसर्वदिङ्मण्डलो वेदव्यासापरनामधेयः श्रीसुदर्शनसूरिः काञ्चीनिवास्तव्यो द्राविडब्राह्मणः—अयं च श्रीभाष्यकृतामाचार्याणां भागिनेयस्य वात्स्यकुलोद्भवस्य श्रीसुदर्शनगुरोः पौत्रस्य नाम्ना श्रीवरदाचार्यस्य शिष्यः ।

अयं च परमकृतज्ञोऽत्रेदमेव पर्याप्तमुदाहरणं यदसौ सर्वतन्त्रस्वतन्त्रप्रज्ञोऽपि श्रीभाष्ये **श्रुतप्रकाशिकां** नाम व्याख्यामकार्षीत्-गुरुभ्योऽर्थो यो मया श्रुतस्तमर्थं धारयितुमेष मे प्रयत्नो न*तु वाग्वैभवख्यापनार्थं वा तर्ककार्कश्यक्रोडीकृतसर्वविपक्षपक्षदमनक्षमताप्रदर्शनार्थं वेति सन्दर्शयन् अतिप्रयासरचनीयामप्यमूं टीकां श्रुतप्रकाशिकां तेने, मेने च तत्त्वतस्तया, अस्ति चाल्पविस्तरा श्रुतप्रदीपिकानामैतन्निर्मितैव श्रीभाष्यव्याख्या परा ।

तत्त्वसारनाम्नाऽपि च ग्रन्थोऽनेन निरमापि, श्रीसम्प्रदायार्थनिरूपणपरः ।

* गुरुभ्योऽर्थः श्रुतः शब्दैस्तत्प्रयुक्तैश्च योजितः ।
सौकर्याय बुभूत्सूनां संकलय्य प्रकाश्यते ॥ इति तेषां ग्रन्थः ।

न केवलमेषा विनीतिरीतिः श्रुतप्रकाशिकाचार्याणां परं भारतवर्षीयाणामुदारचेतसां सर्वेषामपि विदुषां यथाऽऽहुरद्वैतसिद्धिकारा मधुसूदनसरस्वतीसूरयः सिद्धान्तबिन्दौ—यदत्र सौष्ठवं किञ्चित्तद्गुरोरेव मे न हि ॥ यदत्रासौष्ठवं किञ्चित्तन्ममैव गुरोर्न हि ॥ इति ॥

तदर्थस्तु टीकाकृता श्रीनारायणतीर्थविदुषैवमुपवर्णितः—अत्र ग्रन्थे सौष्ठवं गुणवत्त्वं सर्वार्थसंग्राहकत्वादिरूपं गुरोरेव न ममेत्यर्थः श्रुत्यर्थतदनुकूलतर्काणां श्रीमदाचार्यपरम्पराप्राप्तगुरुमूलकत्वादिति भावः । असौष्ठवं भाष्यभामतीविवरणाद्यपेक्षयाऽपि कठिनत्वरूपं तन्ममैव न गुरोरित्यर्थः । अखिलविद्याप्रवीणतार्किकशिरोमणिभट्टाचार्यरीत्यनुसरणादिति भावः ॥ इति ॥

एतस्य कालस्तु श्रीवेदान्ताचार्याणां समान एव यतोऽस्त्येषा प्रसिद्धिः—कदाचिदनुपनीतमतिमात्रबालं स्वभागिनेयं वेदान्ताचार्यं समादाय काञ्चीपुरपुरन्दरस्य विष्णोर्दर्शनार्थमायाता बालस्य मातुला विद्यागुरवोवादिहंसाम्बुदाचार्यास्तदानीं श्रुतप्रकाशिकाचार्याः शिष्यानुपदिशन्तः श्रीभाष्यार्थमासन् सन्निहिता मन्दिरे, ते च तदभ्युत्थानसमादरव्यापृतास्तत्रव विससर्जुरध्यापनकार्यं, कुशलप्रश्नादिना कालव्यधाने च समुत्पन्ने कुत्राद्य भाष्यपाठः समापित इति शिष्यानप्राक्षुः—ततश्च तेभ्यः पूर्वमयममलमतिस्सुरगुरुर्वेदान्ताचार्यः—अयमसौ विषयो यत्र भाष्यपाठावसानमिति विषयविशेषं सहसैव निरदिशत् तदाकर्ण्य जातपुलकाः श्रीश्रुतप्रकाशिकाचार्य्या आशीर्भिरमुं समयूयुजन्नपूपुजँश्चैतदीयां सुमेधसो मेधां प्रतिभां च, मेनिरे च तेन बालेन भाविगुरुणा सनातनाविच्छिन्नसम्प्रदायसमृद्धिमिति किंवदन्ती । तेन वेदान्ताचार्याणां समय एवैषां समय इति विभावयामः अयं श्रीमान् वेदान्ताचार्योऽनन्तसूरिसूनुः श्रीदतोतारम्मागर्भजो विष्णुकाञ्च्यां दीपिकेश्वरसंनिधौ तूपलनामक०जनवासे न्युवास वैक्रमत्रयोदशशतके इत्यादि सुस्पष्टमस्ति ।

निर्ममे च षड्विंशत्युत्तरैकशतं ग्रन्थरत्नानामिति ।
विशेषस्त्वत्रत्यो मदीयाचार्यपरिचिर्यायामनुसन्धेयः ॥

एतस्य ग्रन्थस्य शोधनसमये मद्रासप्रान्तादायातमेकं द्राविडाक्षरपुस्तकमपरं च देवाक्षरपुस्तकद्वयमवलम्बितं, तत्रैकं सत्यसरस्वतीपुस्तकालयस्थमपरं च ब्रह्मामृतवर्षिणीपुस्तकालयस्थमिति त्रितयम् ।

आशासे चामुष्य सर्वस्य प्रयत्नस्य साफल्यं दरदराजकृपया अमत्सरेषु निरूपकेष्विति ।

पौषशुक्लैकादश्यां
वृहस्पतौ
सं. १९५० ।

सत्सम्प्रदायाचार्यः
पण्डितस्वामिराममिश्रशास्त्री,
वाराणसीनिवासनिबद्धप्रवृद्धसमादरः ॥
काश्यां दशाश्वमेधे अगस्त्यमुन्याश्रमाश्रमः ।

सन्तु नः शुभाशिषः पूर्वाचार्या इति
प्रणिहितमना भृशमभ्यर्थयते ।

श्रीमते रामानुजाय नमः ।

# सटीकस्य वेदार्थसंग्रहस्य विषयसूचनिकापत्त्रम् ।

मङ्गलं, मङ्गलश्लोकार्थनिरूपणं, प्रसङ्गतोयादव-भास्कर-शाङ्करमतव्यावृत्तिप्रदर्शनम् ॥

—:०:—



* श्रीयामुनाचार्यैः सिद्धित्रयेऽभिहितः ।

श्रियै नमः । श्रियै नमः । श्रियै नमः ।

॥ श्रीः ॥

श्रियै नमः ।

श्रीपतये नमः ।

श्रीमते रामानुजाय नमः ।

नमोनमो यामुनाय यामुनाय नमोनमः ।
नमोनमो यामुनाय यामुनाय नमोनमः ॥



यस्मिंश्चिरन्तनगिरामिह तत्परत्व-
तत्तत्प्रलम्भनविमूर्छितशोकहानम् ।
आयत्तमस्ति भववारिधिपोतपादो
रामानुजार्यमुनिरेष जयत्यजस्रम् ॥

श्रियै नमः

श्रीपतये नमः ।

पूर्वाचार्येभ्योनमः ।

नमो वेदान्तविशदीकरणदीक्षाय परमगुरवे बोधायनमहर्षये ॥

श्रीमते रामानुजाय नमः ।

भगवद्भाष्यकारेण कृतोवेदार्थसंग्रहः । **# वेदार्थसंग्रहः ।** तात्पर्यदीपिकायुक्तो जीयात्सुमनसां मुदे ॥

---

अशेषचिदचिद्वस्तुशेषिणे शेषशायिने ।
निर्मलानन्तकल्याणनिधये विष्णवे नमः ॥ १ ॥

श्रीमते रामानुजाय नमः । श्रीमते हयग्रीवाय नमः ।
श्रीश्रीनिवासमहागुरवे नमः । पूर्वाचार्येभ्यो नमः ।

वरदं द्विरदाद्रिशेखरं कमलाया दयितं दयानिधिम् ।
सकलार्थिजनार्थितप्रदं प्रणमामि प्रणतार्तिहारिणम् ॥ १ ॥

कृत्वा ऽनवद्यं निगमान्तभाष्यं निराकृतं येन भयं श्रुतीनाम् ।
प्रतारितानामवहुश्रुतैस्तं रामानुजं योगिनमाश्रयामः ॥ २ ॥

श्रीभाष्यकृदुपन्यस्तो यःश्रीशैलपतेः पुरः ।
वेदार्थसंग्रहस्यास्य कुर्मस्तात्पर्यदीपिकाम् ॥ ३ ॥

अशेषेत्यादिश्लोकद्वयेन प्रारिप्सितप्रकरणा(१)विघ्नपरिसमाप्त्यर्थं श्रोतॄणां तत्प्रसिद्ध्यर्थं च स्मृत्याचारप्राप्तं श्रुत्या मङ्गलमाचरति श्रोतृबुद्धिसमाधानार्थमार्थः (२)प्रतिपाद्यसंक्षेपश्च क्रियते तत्रेष्टदेवतोपासनारूपमङ्गलाचारः स्वपक्षस्थापनरूपः

---

(१) शास्त्रैकदेशसम्बद्धं शास्त्रं कार्यान्तरे स्थितम् ।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः ॥

इति पराशरोपपुराणोक्तलक्षणलक्षितःसन्दर्भविशेषःप्रकरणपदेनेह विवक्ष्यते॥

(२) समाधानार्थमादौ इति पा० ।

प्रतिपाद्यसंक्षेपश्च श्रौत आर्थश्च क्रियते प्रथमश्लोकेन, स्वपक्षे च प्रतिपाद्यमुपायोपेयात्मकं तत्र सिद्धवस्तुस्वरूपमुपेयं चतुर्थ्यन्तैः पदैरुच्यते, नमः शब्देनोपायः सूच्यते, तत्रोपेयस्य ब्रह्मण उभयविभूतिवैशिष्ट्यं पूर्वार्द्धेनोच्यते, निर्मलेत्यादिपदेनोभयलिङ्गत्वमुच्यते, तत्र विप्रतिपत्तिविषयस्य तत्त्वमसीति(१) वाक्यस्यार्थनिष्कर्षणमुखेन लीलाविभूतिविशिष्टत्वमुच्यते, अशेषचिदचिद्वस्तुशेषिण इति प्रथमपदेन जगद्ब्रह्मणोः सामानाधिकरण्यं शरीरशरीरिभावनिबन्धनं, शरीरत्वं च चेतनं प्रत्यनन्यार्हशेषत्वम्, एवं सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वे सति हि भेदश्रुतिभिर्घटकश्रुतिभिश्चास्य वाक्यस्याविरोधः । अशेषपदं चेतनबहुत्वं दर्शयति कतिपयचेतननियन्तृताव्यावृत्तिश्चानेन सिद्ध्यति, वस्तु–शब्देन परमार्थत्वं विवक्षितम्, अशेषवस्तुशेषिण इत्येतावताऽलं किमर्थं चिदचिच्छब्दप्रयोग इति चेदुच्यते-यादवप्रकाशमते सर्वमपि चेतनमेव तत्र घटादेश्चैतन्यानभिव्यक्तिमात्रमेवेति न चिदचिद्विभाग इति तद्व्यावृत्तिश्चिदचिच्छब्दाभ्याम् । किञ्च मायिमते जीवब्रह्मणोस्सामानाधिकरण्यं स्वरूपैक्यनिबन्धनम्, अचिद्ब्रह्मणोस्तु बाधार्थमिति-सामानाधिकरण्यस्य नैकरूपोऽर्थ इति तद्व्यावृत्तिश्चाभिप्रेता । किञ्च भास्करमते जीवब्रह्मणोर्भेदश्रुतय औपाधिकभेदविषयाः, अचिद्ब्रह्मणोर्भेदश्रुतयः स्वाभाविकभेदविषया इति भेदश्रुत्यर्थो नैकरूपोऽभ्युपगत इति तद्व्यावृत्तिश्चाभिप्रेता ॥

निःशेष इति वक्तव्ये अकारस्य मङ्गलार्थत्वादशेषेत्युक्तम् । एवं लीलाविभूतिविशिष्टत्वमुक्तं भवति, नित्यविभूतियोगमाह शेषशायिन इति, शेषशब्दः पत्नीपरिजनादेः प्रदर्शनार्थः ताच्छील्यार्थप्रत्ययान्तत्वात् भोगविभूतिसंबन्धस्य स्वाभाविकतया नित्यत्वमभिप्रेतम् । एवमुभयविभूतिविशिष्टत्वमुक्तम् । अथोभयलिङ्गत्वमाह 'निर्मलानन्तकल्याणनिधय इति' निर्मलश्चानन्तश्च कल्याणनिधिश्चेति निर्मलानन्तकल्याणनिधिः । (२) निर्गुणं निरञ्जनं । निरवद्यम् अपहत(३)पाप्मा । समस्तहेयरहितं वैष्णवाख्यं परं पदम् (४) इत्यादिषु ब्रह्मविशेषणत्वेन निर्दोष-

(१) तत्त्वमस्यादिवाक्यस्येपि पा० ।   (३) आत्मा० उ० २ ।
(२) वृह० उ० । ६२ । २१ ।   (४) वि० पु० १ । २२ । ५३ ।

त्वादिवाचिपदानांप्रयोगात् नैर्मल्यं हेयप्रत्यनीकत्वं निर्मलत्वमनुकूलत्वं च परिच्छिन्नेषु केषुचित्प्राकृतवस्तुष्वप्यस्तीति तद्व्यावृत्त्यर्थं सकलेतर(१)परित्यागपूर्वकप्राप्यत्वादिसिद्ध्यर्थं तदुपयोग्यानन्त्यमाह अनन्तशब्देन, अनेन वाङ्मनसनिवृत्तिरूपार्थेगुणनिषेधपरिहारश्चाभिप्रेतः ॥

कल्याणशब्दोऽनुकूलवाचित्वादत्रानन्दाभिधायी, न हि प्रतिकूलोपेतेष्वेषु कल्याणशब्दप्रयोगः । यद्वा अनुकूलवेदनीयत्वात्सर्वे गुणाः कल्याणशब्दवाच्याः निर्मलकल्याणशब्दाभ्यां सामान्यविशेषाभ्यां गोवलीवर्दन्यायेनाऽभिप्रेतः, निधिशब्देन गुणगुणिभावो विवक्षितः, अनेना(२)नन्दोब्रह्मेत्यादिष्वानन्दशब्दस्यानन्दिवाचित्वं सिद्धमित्यभिप्रेतम्, आनन्दं(३)ब्रह्मणोविद्वानिति व्यतिरेकनिर्देशात् । एवं हेयप्रत्यनीकत्वकल्याणगुणाकरत्वरूपेभयलिङ्गत्वं ब्रह्मण उक्तं, विष्णुशब्दोधर्मिनिर्देशकः अनेन शेषित्वमन्तर्यामित्वपर्यन्तमिति स्फोरितं रूढ्या देवताविशेषनिर्णयश्च । एवं चतुर्थ्यन्तैः पदैरुपेयवस्तु निरूपितम् । अथोपायं सूचयति नम इति, मन्मना(४) भवमद्भक्तो मद्याजी मां नमस्कुर्वित्यत्र मद्भक्तशब्दस्य प्रतिपदमन्वयेन नमस्याया भक्त्यन्तर्भावात्, ध्यानार्चनप्रणामादिरिति हि वक्ष्यते । एवं देवतोपासनारूपमङ्गलाचारः श्रौतः कृतः प्रतिपाद्यस्वपक्षस्थापनसंक्षेपश्चार्थतः कृतः ॥ १ ॥

परं ब्रह्मैवाज्ञं भ्रमपरिगतं संसरति त-
त्परोपाध्यालीढं विवशमशुभस्यास्पदमिति ।
श्रुतिन्यायापेतं जगति विततं मोहनमिद-
न्तमो येनापास्तं स हि विजयते यामुनमुनिः ॥ २ ॥

अथ द्वितीयेनागुरूपासनरूपमङ्गलाचारः श्रौतः क्रियते, आर्थः प्रतिपाद्यो परपक्षनिराससंक्षेपश्च क्रियते, तत्र पूर्वार्द्धेन परपक्षोपन्याससंक्षेपः उत्तरार्द्धेन तन्निराससंक्षेपः । परं ब्रह्मैवेत्यादि, परं हेयप्रत्यनीकत्वकल्याणगुणाकरत्वाभ्यां सर्वविल-

(१) सकलचेतनाचेतनेति पा० (२) तै० उ० भृ० ६२ ।
(३) तै० उ० आन० ४८ । (४) भ० १८ । ६५ ।

क्षणम् । एवकारोऽविरोधं स्फोरयति—संश्रितदुरितापहर्तृत्वेन तदिष्टफलप्रदत्वेन च यदाश्रयणीयं तदेवाज्ञानपरवशं चेत्कोऽन्यो रक्षक इति भावः । अज्ञम्—अविद्यातिरोहितस्वरूपम्, अत एव भ्रमपरिगतं—विविधभेददर्शनशालि, संसरति—भेददर्शनकृतजन्मजरामरणादिसांसारिकदुःखभागीत्यर्थः । एवं शङ्करमतमुपन्यस्तम् । अथ भास्करमतमुपन्यस्यते—तत्परोपाध्यालीढमिति, परशब्देनोपाध्यन्तरनिरपेक्षं स्वत एव प्रस्तुतब्रह्मव्यतिरिक्तत्वमुच्यते पराभ्युपगतमिथ्याभूताविद्यान्यत्वं च विवक्षितम्, आलीढं—संबद्धं, विवशं—कर्मपरवशम् । अथ यादवप्रकाशमतम्—अशुभस्यास्पदमिति, अचिद्गतपरिणामार्हताद्रूपाशुभस्य चिद्ग(१)तापुरुषार्थान्वयरूपाशुभस्य चास्पदमित्यर्थः । जीवब्रह्मणोर्भेदस्य स्वाभाविकत्वाभ्युपगमान्न ब्रह्मण्यपुरुषार्थान्वय इति वैषम्यं दुर्वचम्, अभेदस्यापि स्वाभाविकत्वाभ्युपगमेनापुरुषार्थान्वयादिति भावः । अचिद्ब्रह्मणोर्भेदाभेदौ स्वाभाविकौ चिद्ब्रह्मणोस्त्वभेद एव स्वाभाविकः । भेदस्त्वौपाधिकः । मुक्तावभेदवचनादिति भास्करमतं, चिद्ब्रह्मणोरपि भेदाभेदौ स्वाभाविकौ मुक्तौ भेदस्यापि निर्देशादिति यादवप्रकाशमतं, तस्मादुक्त एवार्थः । तत्राशुभस्यास्पदमिति न यादवप्रकाशमतोपन्यासः । परं ब्रह्मेत्यादिपदेन शङ्करमतोपन्यासः । तत्परोपाध्यालीढमित्यादिपदेन भास्करमतोपन्यासः । इतरदर्थसिद्धमिति केचित् । तदानीमशुभस्यास्पदमित्यचिद्गताशुभास्पदत्वमुच्यते । ततोऽपि पक्षत्रयोपन्यास इति निर्वाहो वरं कस्यचिन्मतस्यार्थसिद्धत्वादवान्तरविभागस्य कल्प्यत्वोपपत्तेः । इति—शब्दः पक्षत्रयस्वरूपपरः ।

अथ तन्निराससंक्षेपः—श्रुतिन्यायापेतमिति । श्रुतिः—प्रमाणं, तदनुग्राहकस्तर्को न्यायः तन्मतसाधकं तर्कानुगृहीतं प्रमाणं नास्तीत्यर्थः । यद्वा श्रुतिन्यायापेतं तन्मतं प्रमाणतर्कविरुद्धं बाधकतर्कानुगृहीतं प्रमाणमस्तीति भावः । तन्निरासे किङ्कारणमित्यत्राह-जगति विततमिति । श्रुतिन्यायापेतमिति प्रसिद्धत्वान्न तन्निरासे यत्नः कार्य इति चेत्तत्राह—मोहनमिदं तम इति । तमो यथार्थज्ञानावरणं, मोहनम् अपर(२)मार्थे सत्यगर्थधीहेतुः । अपास्तं

(१) चिद्गतापुरुषार्थयोग्यतारूपाशुभस्येति पा० । (२) अपार्थे इति पा० ।

दूरत उत्सारितमित्यर्थः परमतनिरासः । स हीत्यादिना गुरूपासनमुक्तं जयत्यतिबलो रामः(१) इतिवत् स हि विजयत इत्युक्तम् । अनेन प्राकरणिकार्थस्य साम्प्रदायिकत्वमुक्तं भवति । एवमाद्यं स्वपक्षस्थापनं परपक्षप्रतिक्षेपसंक्षेपं कुर्वता देवतागुरूपासनरूपोभयविधमङ्गलं शिष्टैराचरितं भवति तथा पूर्वैरनुष्ठितं नमस्कृत्य हृषीकेशं,(२) नमो भगवते तस्मै व्यासाये(३)त्यादिषु तथा च श्रुतिः यस्य देव (४) इत्यादि । अथ प्रथमश्लोकार्थमीषद्विस्तरेण वदन् प्राकरणिकमर्थं सप्रमाणकं प्रतिजानीते अशेषजगदित्यादिना ॥ २ ॥

स्वपक्षसंक्षेपः । अशेषजगद्धितानुशासनश्रुतिनिकरशिरसि समधिगतोऽयमर्थः । जीवपरमात्मयाथात्म्यज्ञानपूर्वकवर्णाश्रमधर्मेतिकर्तव्यताकपरमपुरुषचरणयुगलध्यानार्चनप्रणामादिरत्यर्थप्रियस्तत्प्राप्तिफलः ॥

श्रूयते नित्यमिति व्युत्पत्तिसिद्धेन श्रुतिशब्देन वेदस्याऽपौरुषेयत्वान्नित्यनिर्दोषत्वमभिप्रेतं, निकर शब्देनाभिधीयमानकृत्स्नशाखार्थपर्यालोचनं विवक्षितं, तत्राप्यनन्यपरपरभागसिद्ध इति दर्शयितुं शिरः शब्दः । वक्ष्यमाणाभिप्रायेणायमर्थ इत्युक्तं, समधिगतः—सम्यगधिगतः अनधीतशाखान्तरार्थप्रतिपादकेतिहासपुराणादिभिस्समधिगत इत्यर्थः । जगतो मिथ्यात्वान्न भवदभिमतोपायोपेयपराः श्रुतयः, अपि तु निर्विशेषवस्तुज्ञानस्यैव मोक्षोपायत्वप्रतिपादनपरा इति शङ्कां व्युदस्यति अशेषजगद्धितानुशासनेति । जगद्धितानुशासनेति—जगद्धितज्ञापनप्रवृत्तस्य वेदस्य पूर्वमेव भ्रान्ते जगति प्रत्यक्षाद्यनवगतभ्रमान्तरोत्पादकत्वमनुपपन्नमित्यभिप्रायः । हितमुपायोपेयात्मकम् । अनुशासनं विविच्य ज्ञापनम्, अनुपूर्वः शासिर्विविच्यज्ञापनार्थो दृष्ट, इति हि शाब्दाः । अशेषजगच्छब्देन सर्वाधिकारिण उच्यन्ते । हितानुशासनपरो वेदः कथं स्वर्गाद्यपुरुषार्थं पुरुषार्थं बोधयतीति चेत् तत्तदधिकारिविशेषापेक्षया पुरुषार्थत्वमस्तीति तद्बोधनं । तर्हि श्येनेनाभिचरन् यजेते(५)ति कथं पापतममत्यन्ताहितं-

(१) राम० यु० स० ४२ । ३३ ।
(२) भार० १ । १ । २६ ।
(३) भार० १ । १ । ३ ।
(४) श्वेता० उ० ५ । ३२ ५ ।
(५) छा० उ । ६ । ८ ।

कर्म्म विदधातीति चेत् उच्यते तच्च भक्ष्यविशेषैर्बालानिव शठान् वशीकर्त्तुम् । यद्वा देवब्राह्मणहिंसकादिदुष्टनिग्रहार्थत्वेन तस्य हिततमत्वमिति । यद्वा अभिचारादिकर्मणाराध्यत्वतत्तत्फलप्रदत्वरूपभगवदैश्वर्यविशेषज्ञापनेन तदभिधायिशास्त्रस्य हितपरत्वमिति । प्रथमश्लोके उपायस्यातिसंक्षेपेण सूचितत्वात्तं विस्तरेण वदन् प्रतिज्ञातस्यार्थस्यशरीरमाह–जीवेत्यादिना, यद्वा याथात्म्यशब्देन तत्त्वमसीति वाक्ये त्वम्पदस्यचेतनद्वयगर्भत्वं सूचितम् । ऐतदात्म्यमिदं सर्वं तत्सत्यमिति परमात्मात्मकत्वं सत्यमुक्तं, तस्माद्याथात्म्यशब्दस्यायमेवाभिप्रायः । ज्ञानपूर्वकशब्देन वाक्यार्थज्ञानमात्रस्यानुपायत्वं सूचितं । वर्णाश्रमधर्म्मेतिकर्त्तव्यताकशब्देन कर्म्मणो विविदिषासाधनत्वं समुच्चयवादश्च व्यावर्तितौ । परमपुरुषपदेन ध्येयस्य हेयप्रत्यनीकत्वकल्याणगुणाकारत्वाभ्यां सर्वविलक्षणत्वं देवताविशेषत्वं चोक्तं, तमेवं विद्वानमृत इह भवति नान्यःपन्था इति श्रीपुरुषसूक्तानुरोधात् चरणयुगलशब्देन स्वामिनि दास्यानुगुणास्थितिर्दर्शिता, सर्वदा चरणद्वन्द्वं व्रजामीत्यादिवचनानुगुण्यात् । ध्यानार्चनप्रणामादिरित्यत्रादि शब्देन सततङ्कीर्तयन्तोमामित्याद्युक्तकीर्तनयजनादयो विवक्षिताः, ध्यानार्चनप्रणामादयः सर्वे उपासनशरीरान्तर्गता वर्णाश्रमधर्माः प्रयाजादिस्थानीयाः । आग्नेयादिषट्कस्थाने ध्यानार्चनप्रणामादिः । ध्यानं मानसम् । नामसङ्कीर्तनं वाचिकम् । अर्चनादि कायिकं च कर्म्म ।यद्यपि तत्र ध्यानस्य प्राधान्यमितरापेक्षया तथाऽपि तद्विपाकरूपपरमभक्त्यपेक्षयाऽर्चनादितुल्यव्यवहारः,एवं त्रिविधमुपासनं यथा "मन्मनाभव मद्भक्तो मद्याजी मांनमस्कुरु, सततं कीर्तयन्तो मां यजन्तश्च दृढव्रताः । श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् । इतिपुंसार्पिताविष्णौ भक्तिश्चेन्नवलक्षणे"-त्यादि मद्याजी मदर्चनपरः, वेदनध्यानादिशब्दैरन्यतमोक्ताव-प्यर्चनप्रणामादिसहितध्यानस्योपायत्वं न्यायस्मृत्यनुगृहीतश्रुतिसिद्धम् । तत्र सामान्यविशेषवन्यायाद्वेदनादिशब्दानां ध्यानादिपरत्वसिद्धिवत् स्मृत्यनुगृहीतत्वात् अर्चनप्रणामादिसहितध्यानपरत्वसिद्धिरित्यर्थः । तस्माद् ध्यानार्चनप्रणामादिः सर्वोऽप्युपेयविरोधिनिरासकः । अत्यर्थप्रिय इति, ध्यानार्चनप्रणामादिः

सर्वोऽपि अतदर्थप्रीतिपूर्वकः कार्यः, मन्मना भवेत्यादिवचने मद्भ-क्तोमन्मनाभव, मद्भक्तोमद्याजीभवेति प्रतिपदं मद्भक्तपदान्व-यादिति भावः । एवं प्रथमश्लोकसंक्षिप्तमुपायस्वरूपंविस्तृतम् ॥

अस्य जीवात्मनोऽनाद्यविद्यासंचितपुण्यपापरूप-कर्म्मप्रवाहहेतुकब्रह्मादिसुरनरतिर्यक्स्थावरात्मकचतुर्वि-धदेहप्रवेशकृततत्तदात्माऽभिमानजनितावर्जनीयभवभ-यविध्वंसनाय देहातिरिक्तात्मस्वरूप-तत्स्वभाव-तदन्त-र्यामिपरमात्मस्वरूप-तत्स्वभाव-तदुपासन-तत्फलभू-तात्मस्वरूपाविर्भावपूर्व्वकानवधिकातिशयानन्दब्रह्मानु-भवज्ञापने प्रवृत्तं हि वेदान्तवाक्यजातम् ।

उपेयमाह तत्प्राप्तिफल इति, अयमर्थइत्यर्थ-शब्दस्य विशेषणत्वात्पुँल्लिङ्गता पूर्वमुपायस्यातिसंक्षिप्तत्वेन तद्विवरण-परत्वादस्मिन् ग्रन्थे उपायप्रधाननिर्देशः । उपेयं निर्विशेषज्ञ-प्तिमात्रं, निवर्त्यं मिथ्यारूपमविद्यादिकम् । उपायो-वाक्यार्थ-ज्ञानमात्रं, न हि मिथ्यासर्पो गरुडध्याननिवर्त्यः, अपि तु नायं सर्प इति ज्ञानमात्रनिवर्त्यस्तस्मान्न भवदुक्तस्योपायतेत्यत्राह अस्येति । परमात्मैक्यानुपपत्तयेतद्विरुद्धस्वभावतया प्रत्यक्षसि-द्धत्वमुच्यते अस्येति पदेन, अनादिशब्देनान्योन्याश्रयः परि-हृतः, "श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन । अनात्मन्या-त्मबुद्धिर्या अस्वे स्वमितिया मति"रित्युक्तप्रकाराऽत्राविद्याऽभि-प्रेता । तया सञ्चितम् अविद्यासञ्चितम् । "अविद्यासञ्चितं कर्म्मे"ति हि स्मृतिः । उत्क्षेपणादिव्यावृत्त्यर्थं पुण्यपापशब्दः । कथं पुण्यस्याविद्यासञ्चितत्वं, तद्धि देहाद्यतिरिक्तात्मज्ञानव-ताऽनुष्ठीयते उच्यते यथाऽऽत्मनोदेहादिविलक्षणत्वाद्देहात्मज्ञा-नमविद्या तद्वता च पापं क्रियते एवमात्मनो भगवच्छेषत्वात्स्व-तन्त्रात्मज्ञानमप्यविद्या तन्मूलं स्वर्गादिफलदकर्म्मानुष्ठानमिति पुण्यस्याविद्यासञ्चितत्वोपपत्तिरिति । देहात्माभिमानिभिरज-डत्वादिधर्म्मके आत्मनि जडत्वाध्यारोपवद्भगवदात्मक आत्म-

नि स्वनिष्टत्वारोपणं भ्रान्तिरेवेति अविद्यैव हि सा एवंविधक-
र्म्मप्रवाहहेतुकश्चतुर्विधदेहप्रवेशः तत्कृतस्तत्तद्देहेष्वात्माभिमा-
नः अनात्मन्यस्वे चात्मात्मीयधिया कर्म्म कर्म्मणा शरीरप्रवेशः
तच्छरीरसम्बन्धेनाविद्येति प्रवाहोऽनादिः तेनावर्जनीयं भवभयं
जन्मजरामरणादिमयं मिथ्येति सहस्रकृत्वउद्घोषेणापि निवर्त-
यितुमशक्यमित्यभिप्रायेणावर्जनीयमित्युक्तम्, तद्विध्वंसनायेति,
एवं निवर्त्यमुक्तम्, अत्र अन्यजनकभावोपपादनेन प्रतीतिमात्र-
सिद्धत्वाभावाददृष्टद्वारानिवर्त्यमिति सिद्धम् । देहातिरिक्तात्म-
स्वरूपतत्स्वभावेति । स्वरूपं ज्ञानानन्दैकलक्षणं स्वभावो भ-
गवच्छेषत्वम् उपासकत्वानुगुणौ स्वरूपस्वभावौ जीवस्योक्तौ ।
तदन्तर्यामिपरमात्मस्वरूपतत्स्वभावेति, तदन्तर्यामि-शब्देन
जीवस्य परमात्मपर्यन्तत्वेन तद्वाचि शब्दस्य परमात्मपर्यन्तत्व-
मिति सिद्धं परमात्मस्वरूपम्—ईशितृत्वं स्वभावः—प्रणतसौल-
भ्यम् उपास्यत्वानुगुणौ स्वरूपस्वभावावीश्वरस्योक्तौ एवं सिद्धं
रूपमुपेयमुक्तम् । तदुपासनशब्देनोपाय उक्तः । स पूर्वं विस्तृत
इति नात्र विस्तृत उपेयस्य प्राप्तिप्रकार उच्यते तत्फलभूतेत्या-
दिना, ज्ञापनइति । ज्ञापन—शब्देनपूर्वोक्तानुशासनशब्दस्य स्प-
ष्टार्थः, वेदान्तवाक्यजातशब्देनैकवाक्यमात्रपर्यालोचनं व्यावृत्तं,
ब्रह्मानुभवज्ञापन इति निर्देशेन वेदान्तवाक्यानामुपासनारूप-
कार्यप्रधानत्वशङ्का व्यावृत्ता ।

तत्त्वमसि(१) । अयमात्मा ब्रह्म(२) । यआत्मनितिष्ठ-
न्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आ-
त्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः(३) । एष
सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारा-
यणः(४) । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति य-
ज्ञेन दानेन तपसाऽनाशकेन(५) । ब्रह्मविदाप्नोति परम्(६) ।

(१) छा० उ० ६ । ८ । ४ । (२) बृ० उ० ६ । ४ । ५ ।
(३) भा० ३२६ । माध्य० बृ० उ० ५ । ७ । (४) सु० उ० ७ ।
(५) बृ० उ० ६ । ४ । २२ । (६) तै० उ० आन ।

तमेवं विद्वानमृत(१) इह भवति नान्यः पन्था अयनाय विद्यत इत्यादिकम्।

उक्तार्थविषयाणि तानि वाक्यान्याह तत्वमसीति, षड्विधतात्पर्यलिङ्गोपेतत्वात् तत्प्रथममुक्तम्। तत्र जीवविशेषस्य ब्रह्मतादात्म्यं प्रतिपन्नमिति जीवमात्रस्य ब्रह्मात्मकत्वपरं वाक्यमाह अयमात्मा ब्रह्मेति, अथ घटकश्रुतिमाह य आत्मनीति, देवताविशेषनिर्णयार्थमाह एष इति, उपासनस्य वर्णाश्रमधर्मेतिकर्तव्यताकत्वे प्रमाणमाह तमेतमिति, उपासनमेवोपाय इत्यत्र प्रमाणमाह ब्रह्मविदिति, ब्रह्मवित्–परमपुरुषोपासकः। उपायान्तरनिषेधमाह तमेवमिति, आदि–शब्देनोपासनशब्दान्वितवाक्यानि भेदश्रुतयश्च विवक्षिताः। एषु वाक्येषु जीवपरयोः स्वरूपं कथं प्रतिपन्नमित्याकाङ्क्षायामुपबृंहणानुगृहीतश्रुतिप्रतिपन्नं तयोः स्वरूपं विवृण्वन् प्रथमं जीवस्वरूपमाह–

**जीवात्मनः स्वरूपं देवमनुष्यादिप्रकृतिपरिणामविशेषरूपनानाविधभेदरहितं ज्ञानानन्दैकगुणं तस्यैतस्य कर्म्मकृतदेवादिभेदे विध्वस्ते(२)स्वरूपभेदो वाचामगोचरः स्वसंवेद्यः ज्ञानस्वरूपमित्येतावदेव निर्देश्यम्। तच्च सर्वेषामात्मनां समानम्।**

जीवात्मेति, "तथात्मा प्रकृतेस्सङ्गादहं मानादिदूषितः। भजते प्राकृतान्धर्मानन्यस्तेभ्योऽपि सोऽव्ययः॥ पुमान्न देवो न नरो न पशुर्न च पादपः। शरीराकृतिभेदास्तु भूपैते कर्मयोनय' इत्यादिषु प्रकृतिसङ्गाद्देवादिशरीरसङ्गादप्यनेकरूपत्वदर्शनात् तदुभयवाक्यैककण्ठ्यं दर्शयन्नाह देवमनुष्यादिप्रकृतिपरिणामविशेषरूपेति, प्रकृतिपरिणामनिबन्धनो विशेषः प्रकृतिपरिणामविशेषरूपः तद्रूपः नानाविध–शब्देन वाच्यो देवमनुष्यादिष्ववान्तरभेदः आन्तरः सुखित्वदुःखित्वाद्यवान्तरभेदश्च विवक्षितः।

(१) पु० सू० ७ (२) भेदेऽपध्वस्ते इति पा०।

ज्ञानानन्दैकगुणमित्यनेन "निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः । दुःखाज्ञानमला धर्म्माः प्रकृतेस्तेन चात्मनः(१)"॥ इत्यस्यार्थोऽभिप्रेतः ज्ञानानन्दविशेषगुणकं, ज्ञानत्वानन्दत्वादिगुणकं वा न तु ज्ञानमात्रस्वरूपम् । ननु कथं देवादिभेदराहित्यं प्रत्यक्षानुमानागमैः, तथाहि प्रतिपत्तिरिति शङ्कायां प्रत्यक्षादीनि शरीरविस्पृष्टात्मविषयाणि निष्कृष्टात्मविषयवाक्यानि तु भेदराहित्यं वदन्तीत्यादि वदन्भेदशङ्कां च परिहरति तस्यैतस्येति, अत्राद्वैतभ्रमास्पदानि कानिचिद्वचांसि व्याख्यातानि भवन्ति तस्येति ज्ञानानन्दैकस्वरूपत्वं विवक्षितम्, एतस्येति शरीरसंबन्धोऽभिप्रेतः कर्म्मकृतदेवादिभेदे विध्वस्त इत्यनेन "एकस्वरूपभेदो हि बाह्यकर्मावृतिप्रजः । देवादिभेदे विध्वस्ते नास्त्येवावरणो हि सः" ॥ इत्यस्यार्थो विवृतो भवति । स्वरूपभेदो वाचामगोचरः स्वसंवेद्य इत्यनेन प्रत्यस्तमितभेदमित्यादिवचनं व्याख्यातं भवति । एकस्वरूपेति ग्रन्थस्यायमर्थः ज्ञानानन्दैकस्वरूपस्यात्मनो बुद्धिसुखाद्यान्तरभेदः संसारहेतुकर्म्मजन्यशरीराख्यावरणहेतुकः देवादिशरीरभेदे विनष्टे सति नात्मनो भेद आवरणो हि सः । स हि देवादिशरीरभेद आवरणः । तस्मात्तन्नाशे तत्कृतभेदो नात्मनि विद्यत इत्यर्थः नात्मनावरण इति पाठान्तरेऽर्थः स्पष्टः । प्रत्यस्तमितेत्यादिग्रन्थस्यायमेवार्थः । प्रत्यस्तमितदेवमनुष्यादिभेद सत्तामात्रं न तु जन्मादिविकारास्पदम्, अत एवागोचरं वचसां देवादिभेदवचसां जायत इत्यादिवचसाम् अगोचरम् । तुच्छत्वव्यावृत्त्यर्थं माहात्मसंवेद्यमिति, तच्च स्वरूपतो धर्म्मतश्च ज्ञानं तच्च ब्रह्मशब्दाभिलप्यमित्यर्थः संसारदशायां योव्यवहारः स्तदगोचरं चेत् जानामीत्यपि तदानीं व्यवहारात् ज्ञानस्वरूपमित्यपि न वक्तुं शक्यम् यदि शक्यम् तर्हि देवादिव्यवहारश्च शक्य इत्यत्राह ज्ञानस्वरूपमित्येतावदेव निर्देश्यमिति, न ह्यौपाधिकाकारभेदे विध्वस्ते तद्वाचिशब्दागोचरत्वमिवस्वाभाविकरूपवाचिशब्दागोचरत्वमित्यर्थः, सर्वशब्दागोचरं चेद्वचसामगोचरमित्यपि न शक्यते वक्तुमिति भावः । तच्च सर्वेषामात्मनां

(१) प्रकृतेस्ते तु नात्मन इति पा० ।

समानमित्यनेन पुमानेको व्यवस्थित इत्यादिष्वेकशब्दो व्याख्यातो भवति तन्मनस्समतालम्बिकायैं साम्यं हि मुक्तये निर्दोषं हि समं ब्रह्मेत्यादिवचनात् ॥

एवंविधचिदचिदात्मकप्रपञ्चस्योद्भवस्थितिप्रलयसंसारनिवर्त्तनैकहेतुभूतः समस्तहेयप्रत्यनीकतयाऽनन्तकल्याणैकतानतया च स्वेतरसमस्तवस्तुविलक्षणस्वरूपोऽनवधिकातिशयासंख्येयकल्याणगुणगणः सर्वात्मपरब्रह्मपरज्योतिः परतत्त्वपरमात्मसदादिशब्दभेदैर्निखिलवेदान्तवेद्योभगवान्नारायणः पुरुषोत्तम इत्यन्तर्यामिस्वरूपम् । अ(१)स्यैव च वैभवप्रतिपादनपराः श्रुतयः । स्वेतरसमस्तचिदचिद्वस्तुजातान्तरात्मतया निखिलनियमनं तच्छक्ति-तदंश-तद्विभूति-तद्रूप तच्छरीर-तत्तनुप्रभृतिभिः शब्दैस्तत्सामानाधिकरण्येन च प्रतिपादयन्ति ।

अथान्तर्यामिस्वरूपमाह एवंविधेति, जीवस्वरूपस्य देवादिशरीरस्य च प्रस्तुतत्वादेवंविधेत्युक्तम् । यद्वा प्रत्यक्षादिप्रमाणप्रसिद्धतयोक्तम् यद्वेत्यादिना जगत्कारणत्वमोक्षप्रदत्वेवक्के, स्वेतरवैलक्षण्यं तृणादेरप्यस्तीति तद्व्यावृत्यर्थं शोधकवाक्योक्तोभयलिङ्गत्वेन वैलक्षण्यमुच्यते समस्तेत्यादिना, कल्याणशब्द आनन्दवाची समस्तवस्तुविलक्षणस्वरूप इत्यत्र स्वरूपशब्देन विशेष्यांशोऽभिप्रेतः । उपास्यत्वप्राप्यत्वोपयोगिगुणजाताभिप्रायेणाह अनवधिकातिशयासङ्ख्येयकल्याणगुणगण इतिसद्ब्रह्मात्मादिसाधारणशब्दैर्भगवन्नारायणपुरुषोत्तमाद्यसाधारणशब्दैश्चैक एवाभिधीयते इत्याह सर्वात्मेत्यादिना, अनवच्छब्देन हेयप्रत्यनीकत्वं कल्याणगुणास्पदत्वं च विवक्षितं नारा-

(१) तस्य चेति पा० ।

यणशब्देनोभयविभूतिमत्त्वं पुरुषोत्तमशब्देन विभूतिभूतचिदचि-
चिद्वैलक्षण्यमित्यन्तर्यामिस्वरूपमित्युक्तं भवति इत्यर्थः । अथ
भेदश्रुतेरर्थः उक्तः, अयं चाभेदश्रुतिविरुद्ध इति शङ्कायां तदैका-
र्थ्यमुच्यते अस्य चेत्यादिना अस्य-भेदश्रुतिप्रतिपन्नस्य वैभव-
प्रतिपादनपराः श्रुतय इति भेदश्रुत्यानुगुण्याद्घटकश्रुत्यैकार्थ्या-
त्सामानाधिकरण्यस्वाभाव्याच्चाभेदश्रुतयोऽपि तद्वैभवप्रतिपा-
दिका इत्यभिप्रायः । सामानाधिकरण्यवाक्यस्य तद्वैभवप्रति-
पादकत्वं कथमित्यत्राह स्वेतरेत्यादिना, अन्तर्यामिणः परमा-
त्मनः तदेकनियाम्यत्वेन कृत्स्नस्य शरीरत्वात्तद्वाचिनःशब्दाः
शरीरिपर्यन्तमभिदधतीति समानाधिकरणवाक्यैर्भिन्नप्रवृत्तिनि-
मित्तपदैर्व्यधिकरणवाक्यैश्च तद्वैभवमेव प्रतिपाद्यत इति सर्व
श्रुतीनामैकार्थ्यमित्यर्थः तन्नियमनं प्रतिपादयन्तीत्यन्वयः परस्य
ब्रह्मणःशक्तिस्तथेदमखिलं जगद्विष्णोरंशो द्विजोत्तम विष्णो-
रेता विभूतयः परस्य ब्रह्मणो रूपं जगत्सर्वं शरीरं ते तत्सर्वं
हरेस्तनुः तानि सर्वाणि तद्वपुरित्यादिषु शक्त्यंशादिशब्दानां
प्रयोगो द्रष्टव्यः तच्छक्तितदंश इत्यादिना प्रतिपदं तच्छब्दप्र-
योगावृत्तिरेकैकस्य निरपेक्षहेतुत्वाभिप्रायेण । यद्वायं परमा-
त्मानं प्रति यदेतज्जगच्छरीरमुच्यते तमेव प्रति तदेवेदं जग-
च्छक्तिरंश इतिचोच्यते, अत एव पितृत्वपुत्रत्ववत्प्रतिसम्बन्धि
भेदादविरोधो दुर्वचः । अत एव शरीरादिशब्दानामेकार्थपर-
त्वेनाविरोधे वाच्ये शरीरशब्दानुगुणं शक्त्यादिशब्दानां वर्ण-
नीयः । अन्तरो यमयतीति लक्षणपूर्वकं शरीरशरीरिभावस्य
मुख्यतयोक्तत्वात्कार्योपयोगिविशेषत्वाच्छक्तिः विशिष्टे ब्रह्म-
णि विशेषणतयैकदेशत्वादंशः नियाम्यतया विभूतिः व्याप्यत्वे
सति नियाम्यत्वात् शरीरम् । अतस्सर्वेषामैकार्थ्यमित्यभिप्रायः
शरीरतनुशब्दोपादानं दृष्टान्ताभिप्रायेण कृतं, शरीरतनुशब्द-
योरिव शक्त्यादिशब्दानामविरोधो वर्णनीय इति भावः । एव
प्रथमश्लोकार्थ ईषद्विवृतः ।

शाङ्करपक्षसंक्षेपः । तस्य वैभवप्रतिपादनपराणामेषां सामा-
नाधिकरण्यादीनां विवरणे प्रवृत्ताः केचन निर्विशेष-

ज्ञानमात्रमेवब्रह्म, तच्च नित्यमुक्तस्वप्रकाशस्वभावमपि तत्त्वमस्यादिसामानाधिकरण्यावगतजीवैक्यं ब्रह्मैवाज्ञं बध्यते मुच्यते च निर्विशेषचिन्मात्रातिरेकीशेशितव्याद्यनन्तविकल्प स्वरूपं कृत्स्नं जगन्मिथ्या, कश्चिद्बद्धः कश्चिन्मुक्त इतीयं व्यवस्था न विद्यते, इतः पूर्वं केचन मुक्ता इत्ययमर्थो मिथ्या, एकमेव शरीरं जीववत् निर्जीवानीतराणि शरीराणि, तच्छरीरं किमिति न व्यवस्थितम् । आचार्यो ज्ञानोपदेष्टा मिथ्या, शास्त्रं च मिथ्या, शास्त्रप्रमाता च मिथ्या, शास्त्रजन्यं ज्ञानं च मिथ्या, एतत्सर्वं मिथ्याभूतेनैव शास्त्रेणावगम्यत इति वर्णयन्ति ।

अथ द्वितीयश्लोकस्य पूर्वार्द्धस्य परपक्षत्रयोपन्यासपरस्यार्थं क्रमाद्विवरिष्यन्प्रथमं मायि(१)मतसंग्रहं विवृणोति तस्य वैभवेत्यादि तस्यैषामिति पदद्वयस्यायमभिप्रायः । तस्यभेदश्रुतिभिः समस्तचिदचिद्वस्तुविलक्षणतया प्रतिपन्नस्य ब्रह्मणः एषां भेदश्रुत्यानुगुण्यात्सामानाधिकरण्यस्वाभाव्यात् घटकश्रुत्यैकार्थ्याच्च तदद्वैतप्रतिपादनपराणामिति भावः । आदिशब्देन घटकश्रुतयो विवक्षिताः भेदनिषेधश्रुतयो वा एषां विवरणे प्रवृत्ताः केचनेत्यनेनविरोधः स्यादिति विरोधः स्फोरितः । केचन वर्णयन्ति इत्यन्वयः । निर्विशेषज्ञानमात्रमेव ब्रह्मेति मात्रशब्देन क्वचिदंशे जहत्स्वव्यावृत्तिर्वा कार्त्स्न्येन ज्ञानमित्यर्थः । स यथा सैन्धवघन इति श्रुतिवाक्यार्थोऽत्राभिप्रेतः । यद्वा निर्विशेषशब्देन श्रौतनिषेधोऽभिप्रेतः तेन ज्ञातृज्ञेयस्वरूपविशेषा गुणरूपविशेषाश्च निषिद्धा भवन्ति । ज्ञानशब्देन ज्ञानस्वरूपतोक्तिरूपार्थगुणनिषेधोऽभिप्रेतः ज्ञानरूपस्यैव ज्ञातृत्वं ज्ञेयत्वं च सिद्धान्तिनोऽ-

(१) शाङ्करमतेति पा० ।

भिमतम् । अतस्तद्व्यावृत्त्यर्थं न दृष्टेर्द्रष्टारं यस्यामतमित्याद्युक्तज्ञातृत्वज्ञेयत्वनिषेधाभिप्रायो मात्रशब्दः । एवकारेण सविशेषत्वप्रतिपादकवाक्यानामतत्त्वावेदकत्वमभिप्रेतं, स्वयाथात्म्याज्ञानपूर्वको बन्धः स्वप्रकाशे वस्तुनि न सम्भवति इति ब्रह्मनित्यमुक्तमेवेत्यात्राह नित्येति, वस्तुतो नित्यमुक्तस्वप्रकाशमपि जीवैक्यस्य सामानाधिकरण्यवाक्यावगतत्वात्, ब्रह्मैवाविद्यातिरोहितं भेदभ्रममनुभवतीति कल्प्य मत एव बन्धश्च मोक्षश्चोपपन्न इत्यर्थः । जीवैक्यं श्रुतिसिद्धमभ्युपगत चेच्छ्रुतिसिद्धेश्वरेशितव्यादिभेदोऽभ्युपगन्तव्य इत्यत्राह निर्विशेषेति, अद्वैतवाक्यबलेन तेषां वाक्यानां मिथ्याविषयत्वमाश्रयणीयमित्यर्थः । बद्धमुक्तव्यवस्थासिद्ध्यर्थमात्मभेदोऽभ्युपगन्तव्य इत्यात्राह कश्चिदिति, बद्धमुक्तव्यवस्था श्रुतिसिद्धत्वादङ्गीकार्या शुकादयो हि मुक्ता इत्यत्राह इतः पूर्वमिति, चेष्टादिभिः सर्व शरीराणामात्मवत्त्वं सिद्धम् तथा सति सुखदुःखादिव्यवस्थायां चात्मनि भेदेन मोक्षबन्धव्यवस्था स्यादित्यत्राह एकमेव शरीरमिति, जीवैक्ये सर्वशरीराणां सजीवत्वाभावात्सुखादिप्रतिसन्धानाभाव इत्यर्थः । एकस्य सजीवत्वंचैक्योपदेशबलात्स्वीकृतम् । एकमेव शरीरं सजीवं चेत्तच्छरीरको जीवः श्रवणमननादिभिर्बुद्धाद्वैतज्ञानः स्यादिति बन्धोन स्यादित्यत्राह तच्छरीरं किमिति न व्यवस्थितमिति, इदं शरीरं सजीवम् एतच्छरीरको जीवो ज्ञानवानिति निश्चेतुमशक्यमित्यर्थः । शिष्याचार्यव्यवस्थायामात्मबहुत्वं स्यात् शास्त्रस्य च प्रामाण्यद्रष्टव्यतिरिक्तं सत्यं स्यादित्यत्राह आचार्य इति, प्रमाता श्रोता विवक्षितः एकैकमेव निरपेक्षं दूषणमिति ज्ञापनाय मिथ्याशब्दाऽऽवृत्तिः । इति वर्णयन्तीति, वर्णनशब्देन ग्रन्थप्रपञ्चोऽर्थदौस्स्थ्यञ्च विवक्षितम् ॥

भास्करपक्षसंक्षेपः। अपरेऽपहतपाप्मत्वादिसमस्तकल्याणो(१)पेतमपि ब्रह्मैतेनैवैक्यावबोधेन केनचिदुपाधिविशेषेण संबद्धं बध्यते मुच्यते च नानाविधमलरूपपरिणामास्पदं चेति व्यवस्थिताः ॥

(१) कल्याणो इति पाठस्तुभ्रममूलकः ॥

अथ द्वितीयश्लोकपूर्वार्द्धस्थभास्करमतोपन्याससंग्रहं च विवृणोति अपर इत्यादिना, विवरणे प्रवृत्ता इत्यनुवर्त्तते, अपरे व्यवस्थिता इत्यन्वयः। प्रमाणसिद्धस्य बाधायोगात्सगुणत्वं तैरभ्युपगतमित्याह अपहतपाप्मत्वादीति,। स्वतोऽपहतपाप्मत्वादियुक्तमपि ऐक्योपदेशान्यथाऽनुपपत्त्या उपाधिसम्बन्धोऽभ्युपगत इत्याह तेनैवेति, ऐक्यावबोधेन व्यवस्थिता इत्यन्वयः। केनचिद्देवमनुष्याद्युपाधिव्यन्यतमेन । तथा सति बन्धमोक्षव्यवस्थाऽप्युपपद्यत इत्याह बध्यते मुच्यते चेति, बध्यते—संसरति, एवं जीवत्वं ब्रह्मण उक्तम्। अथाचिद्रूपपरिणाममाह नानाविधेति, मलरूपशब्दो दोषरूपत्वपरः।

यादवपक्षसंक्षेपः। अन्ये पुनरैक्यावबोधयाथात्म्यं वर्णयन्तः स्वाभाविकनिरतिशयापरिमितोदारगुणसागरं ब्रह्मैव सुरनरतिर्यक्स्थावरनारकिस्वर्ग्यपवर्गिचेतनैकस्वभावं स्वभावतोविलक्षणमविलक्षणं च वियदादिनानाविधमलरूपपरिणामास्पदं चेति प्रत्यवतिष्ठन्ते ।

अथ यादवप्रकाशमतसंग्रहं विवृणोति अन्ये पुनरित्यादिना, ऐक्यावबोधेति याथात्म्यं वर्णयन्त इत्युपालम्भः । यथाऽचिद्ब्रह्मणो जीवब्रह्मणोश्चैक्यमेकरूपं प्रतिपन्नं, तथाभेदोऽप्येकरूपः प्रतिपन्न इति अचिद्ब्रह्मणोर्भेदस्य स्वाभाविकत्वं, जीवब्रह्मणोर्भेदस्यौपाधिकत्वं च न वाच्यमुभयत्रभेदः स्वाभाविक इति वर्णयन्त इत्यभिप्रायः। तत्रापि सगुणत्वाङ्गीकारमाह स्वाभाविकेति, अपरिमितत्वम् असंख्येयत्वम्, उदार उत्कृष्टः, प्रशस्यः तादृशो गुणसागरो गुणगणो यस्येति बहुव्रीहिः. जीवगताचिद्गताशुभास्पदत्वमाह सुरनरेति, स्पष्टं । तत्रेत्यादिना द्वितीयश्लोकोत्तरार्द्धोक्तपरपक्षप्रतिक्षेपं विवृणोति श्रुत्यर्थपर्यालोचनपरा इति, पर्यालोचनं परित आलोचनम्, अभेदभेदघटकसमानाधिकरणश्रुतितत्पौर्वापर्याद्यालोचनपराः । न त्वेकवाक्यमात्रतृप्ता इत्यर्थः । उदाहरन्ति भगव(१)द्यामुनाचार्या इति शेषः ॥

(१) सिद्धित्रये

तत्र प्रथमपक्षस्य श्रुत्यर्थपर्यालोचनपरा दुष्परिहरान् दोषान् उदाहरन्ति तथा हि प्रकृतपरामर्शितच्छब्दावगतस्य ब्रह्मणः स्वसंकल्पकृतजगदुदयविभवविलयादयः तदैक्षत बहु स्यां प्रजायेयेत्यारभ्य सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा इत्यादिभिः पदैः प्रतिपादिताः। तत्संबन्धितया प्रकरणान्तरनिर्दिष्टाः सर्वज्ञता–सर्वशक्तित्व--सर्वेश्वरत्वसर्वप्रकारत्व--समाभ्यधिकनिवृत्ति—सत्यकामत्व-सत्यसंकल्पत्व--सर्वावभासकत्वाद्यनवधिकातिशयासंख्येयकल्याणगुणगणा अपहतपाप्मेत्याद्यनेकवाक्यावगतनिरस्तनिखिलदोषता च सर्वे तस्मिन् पक्षे विहन्यन्ते ।

तत्र प्रथमं तत्त्वमसीति वाक्यस्य निर्विशेषपरत्वे अनेकदूषणानि विवक्षन् पूर्वं तच्छब्दावगतगुणजातमाह(१)प्रकृतेत्यादिना, प्रकृतपरामर्शीति पदं हेतुगर्भं, तच्छब्दो गुणविशिष्टवाची प्रकृतपरामर्शित्वादित्यर्थः। कथं गुणानां प्रकृतत्वमित्यत्राह स्वसंकल्पेति, आदिशब्देनानुप्रवेशनामरूपव्याकरणादयो गृह्यन्ते जगदुदयविभवविलयादय एव तत्तद्वाक्यप्रतिपन्नतया विशेष्यन्ते । तदैक्षतेत्यादिभिः पदैः प्रतिपादिता इत्यन्तेन तत्प्रकरणाधीतगुणा उक्ताः । सर्वशाखाप्रत्ययन्यायेन प्रकरणान्तराकृष्टान् गुणानाह तत्सबन्धितयेति, कारणवस्तुसंबन्धितया प्रकरणान्तरोक्तगुणा गण्यन्ते सर्वज्ञतेत्यादिना, यस्सर्वज्ञस्सर्ववित्(२) पराऽस्य(३)शक्तिर्विविधैव श्रूयते ईशनाय स ईशो(४)

(१) गुणबाधमाहेति पा० । (२) यस्सर्वज्ञस्सर्ववित्–मु० उ० । १।१।१० (३) श्वे० उ० ६ । ८ । (४) श्वे० उ० ५ । ×

ऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यते ईशनाय न तत्समश्चा(१)भ्यधिकश्च दृश्यते सत्यकामः(२) सत्यसंकल्पः तस्य भासा(३) सर्वमिदं विभाति इत्यादिवाक्येष्वमी सर्वज्ञतादिगुणा द्रष्टव्याः । एकैकमनवधिकातिशयाः कल्याणगुणा असंख्येया इत्याह अनवधिकेति, हेयप्रत्यनीकत्वमाह अपहतपाप्मेति, अमी गुणास्सर्वे सृष्ट्युपयोगित्वेन प्रकरणान्तरोक्ता आकृष्टा भवन्ति समाभ्यधिकनिवृत्तौ सत्यां तदेककारणत्वसिद्धिः सर्वावभासकत्वं च । सृष्टजगत्स्थित्युपयोगित्वेन कारणत्वापेक्षितं हेयप्रत्यनीकत्वं च सर्गाद्युपयोगिहेयास्पदत्वे कर्मवश्यत्वेन स्वातन्त्र्यादिभङ्गप्रसङ्गात् ते सर्वे तच्छब्दावगता विहन्यन्त इत्यर्थः ।

**अथ स्यात् उपक्रमेऽप्येकविज्ञानेन सर्वविज्ञानमुखेन कारणस्यैव सत्यतां प्रतिज्ञाय तस्य कारणभूतस्यैव सत्यतां विकारजातस्य चासत्यतां मृद्दृष्टान्तेनदर्शयित्वा सत्यभतस्यैव ब्रह्मणः सदेव सोम्येदमग्रआसीदेकमेवाद्वितीयमिति सजातीयविजातीयनिखिलभेदनिरसनेन निर्विशेषतैव प्रतिपादिता, एतच्छोधकानि प्रकारणान्तरगतवाक्यान्यपि सत्यं ज्ञानमनन्तं ब्रह्म निष्कलं- निष्क्रियं निर्गुणं निरञ्जनं विज्ञानमानन्दमित्यादीनि सर्वविशेषप्रत्यनीकाकारतां बोधयन्ति,**

अथ स्यादित्यादि, उपक्रमशब्देनोपक्रमोपक्रमो विवक्षितः तत्त्वमसीति वाक्यापेक्षया तदैक्षतेति वाक्यस्योपक्रमत्वेऽपि त्वेकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं तस्याप्युपक्रमभूतमित्यभिप्रायः । एकविज्ञानेन सर्वविज्ञान'प्रतिज्ञामुखेन' कारणस्यैव सत्यतां प्रतिज्ञायेति, एकविज्ञानेन सर्वविज्ञानद्वारा एकविज्ञा-

(१) छ० उ० । ८ । १    (२) श० उ० ६ । ७ । ३ ।

(३) क० उ० । २ । ५ । १५ ।

नेन सर्वविज्ञानप्रतिज्ञया कारणस्यैव सत्यत्वं फलितमित्यर्थः । कारणस्यैव सत्यत्वं दृष्टान्तवाक्ये कण्ठोक्तमित्याह तस्येति, दार्ष्टान्तिकवाक्येऽपि निर्विशेषपरत्वमुक्तमित्याह सत्यभूतस्येति, निखिलभेदशब्देन स्वगतभेदो ऽविवक्षितः विजातीयभेदान्तर्गतत्वात्स्वगतभेदस्य । शोधकवाक्यानामपि निर्विशेषपरत्वमाह एतदिति, एतच्छोधकानि कारणवाक्यावगतस्य शोधकत्वात् तदैकार्थ्येन निर्विशेषपराणीत्यर्थः । सामानाधिकरण्यस्वाभाव्यात्(१)निर्गुणमित्यादिशोधकवाक्यान्तरैकार्थ्याच्च सत्यं (२)ज्ञानंविज्ञानमानन्दमित्यादीनि शोधकवाक्यानि । निर्विशेषपराणीत्यभिप्रायेणाह सत्यं ज्ञानमिति, सत्यादिपदानां निर्विशेषपरत्वेप्रवृत्तिनिमित्तभेदाभावात् सामानाधिकरण्यलक्षणहानिरित्यत्राह सर्वविशेषप्रत्यनीकेति, ।

न चैकाकारताऽवबोधे पदानां पर्य्यायता एकत्वेऽपि वस्तुनः सर्वविशेषप्रत्यनीकाकारत्वोपस्थापनेनसर्वपदानामर्थवत्त्वादिति । नैतदेवम् एकविज्ञानेनसर्वविज्ञानं सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावान्न सेत्स्यति सत्यमिथ्यात्वयोरेकताप्रसक्तिर्वा, अपि त्वेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा सर्वस्य तदात्मकत्वेनैवसत्यत्वे सिद्ध्यति,

प्रतियोगिविशेषाः(३)प्रवृत्तिनिमित्तानीत्यर्थः । तर्हि तद्व्यावृत्तिरूपधर्म्मः स्यादित्यत्राह एकाकारतामिति, आकारशब्दः स्वरूपवाचीस्वरूपमेव व्यावृत्तिरितिभावः । निर्विशेषवस्तुपरत्वे पदानां पर्यायता(४) स्यादिति पर्यायत्वशङ्कां परिहरति न चेति, । कुत इत्यत्राहएकत्वेऽपीति । अर्थवत्त्वात्–प्रयोजनवत्त्वात् । अथ सिद्धान्त(५)माह नैतदेवमिति, एकविज्ञान

(१) छा० उ० । ६ । २ । १ । (२) तै० आ० । १ । ३ । (३) प्रतियोगिभेदा इति पा० । (४) समानशक्यतावच्छेदकत्वे सति विभिन्न शक्ततावच्छेदकत्वं पर्यायत्वम् । (५) सिद्धान्त्याहेति पा० ।

सर्वविज्ञानं च किमेकं ज्ञानम्? उत ज्ञानद्वयम्? । एकत्वपक्षे किमेकविज्ञानेन सर्वविज्ञानं सर्वस्याभावादुच्यते, उतैकस्यसर्वस्य च तादात्म्यादिति विकल्पमभिप्रेत्य प्रथमं दूषयति एकेति, एकेत्यादि स्पष्टं न सेत्स्यति इति सर्व–शब्दस्य सर्वाभाववाचित्वाभावादिति भावः । द्वितीयं दूषयति, सत्येति, सत्यमिथ्यात्वयोरेकताप्रसक्तिर्वेति जगतः सत्यत्वं ब्रह्मणो मिथ्यात्वं वेत्यर्थः । द्वितीय(१)पक्षे च एकविज्ञानेनसर्वविज्ञानं स्थालीपुलाकन्यायेन सर्वस्यैकसाधर्म्याद्यदि स्यात् तत् त्वन्मते नयुक्तं कार्यस्या(२)सत्यत्वात् एकवैधर्म्याद्वा स्यात् देवदत्तप्राधान्यज्ञानेनेतरेषामप्रधानतया ज्ञातत्ववत् तदानीं त्वन्मते मिथ्यात्वेनेत्यध्याहारः स्यात् । ज्ञातव्या(३)भावेन निवृत्तिलक्षणा वा स्यात् ज्ञानद्वयवैरूप्यादस्वारस्यं चेत्यभिप्रायः । अपि त्विति । न हि घटपयोः सत्यत्वेऽपि घटज्ञानेन पटो ज्ञातो भवतीति तद्व्यावृत्त्यर्थमाह सर्वस्य तदात्मकत्वेनैव सत्यत्व इति, ब्रह्मात्मकत्वेनैव सत्यत्व इत्यर्थः । न हि कारणावस्थे ब्रह्मणि ज्ञाते कार्य्यावस्था ज्ञाता भवतीति चेदुच्यते, न हि विशेषणान्तरविशिष्टाकारेण विशेषणान्तरान्वयः अपि त्वेकस्मिन्धर्म्मिणि विशेषणद्वयान्वयो विवक्षितः तस्माज्ज्ञातत्वविशिष्टाकारेण सर्वत्वं सर्वत्वविशिष्टाकारेण ज्ञातता वा किंतु सर्वत्वं ज्ञातत्वं चैकाश्रयवर्त्तिनी इति, अवस्थानवगमेऽपि धर्म्मिण ऐक्येन ज्ञाततया प्रयोगो मुख्य एव दृष्टः सोऽयं देवदत्तः पूर्वमेव मयाऽयं ज्ञात इत्यादिषु, न हि तत्र वर्तमानकालविशिष्टत्वेन पूर्वं ज्ञातः तस्मात्परिषद्दर्शनेनामी पुरुषा दृष्टा इतिवदिदमुपपन्नम् । एकस्य सत्यत्वज्ञानेन व्यतिरिक्तं मिथ्यात्वेन ज्ञातं भवतीति चेन्न येनाश्रुतं(४)श्रुतं भवतीत्यादिषु वाक्येषु मिथ्यात्वेनेत्यध्याहारः एकविज्ञानस्य सर्वविज्ञानस्य च वैरूप्यम् अमुख्यत्वं च ज्ञात्रभावात्, न हि सर्वं मिथ्यात्वेन जानन् क्वचित् कश्चिज् ज्ञाताऽस्ति तस्मात्सर्वविज्ञानशब्देन सर्वज्ञाननिवृत्तिलक्षणा स्यादिति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं किं

(१) द्वित्वपक्षे चेति पा० । (२) कार्यस्यासामान्यादिति पा० ।
(३) ज्ञातृत्वाभावेनेति पा० । (४) छा० उ० । ६ । १ । २ ।

तदात्मकत्वेनैव सत्यत्वं कथं तथा सति कथं प्रतिज्ञोपपत्तिः उपक्रमवाक्यं सत्यत्वपक्षानुगुणमपि तदुपसंहारापेक्षया प्रबलं न तु महावाक्यस्वारस्यापेक्षया, महावाक्यं च मिथ्यात्वपक्षानुगुणं तत्त्वमसि मृत्तिकेत्येव सत्यं सदेवैकमेवेत्यादिषु तथा प्रतीतेरिति शङ्कायामाह अयमर्थ इति, प्रतिज्ञावाक्योपक्रमभूतं स्तब्धोऽसीति वाक्यमारभ्य व्याख्यातुं स्तब्धोऽसीति श्रूयमाणस्यमपुरुषार्थदा(१)क्योर्थमाह श्वेतकेतुं प्रत्याहेति,

**अयमर्थः श्वेतकेतुं प्रत्याह स्तब्धोऽस्युत तमादेशमप्राक्ष्य इति परिपूर्ण इव लक्ष्यसे तानाचार्यान्प्रति तमप्यादेशं पृष्टवानसीति आदिश्यतेऽनेनेत्यादेशः आदेशः—प्रशासनम्, एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादिभिरैकार्थ्यात्,**

स्तब्धोऽसीत्यादिश्रुतिवाक्योपादानं तत्र वाक्ये स्तब्धोऽसीत्यस्यार्थमाह परिपूर्ण इव लक्ष्यस इति, प्रच्छ इति धातुर्द्विकर्मकः वक्तृकर्मकः वाच्यकर्मकश्चेति तत्रादेशशब्दाभिहितं वाच्यं कर्मेति दर्शयितुं तानाचार्यान् प्रतीति वक्तृकर्म व्याहृतं न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदिष्यन्कथं मे नावक्ष्यन्निति तच्छब्दनिर्दिष्टा आचार्या अत्र स्मारिताः, तानिति बहुवचनेन तमादेशमिति तच्छब्दस्याचार्यविषयत्वशङ्काव्युदासः। तमपीति श्रोतुर्दुर्लभमित्यपि—शब्दाभिप्रायः। कर्मादि श्रोतव्यान्तरसमुच्चयो वाऽभिप्रेत इतिश्वेतकेतुं प्रत्याहेत्यन्वयः। आदेशशब्दं व्याचष्टे आदिश्यत इत्यादिना, आदिश्यतेऽनेनेत्यादेश इति प्रत्ययार्थव्याख्यानम् । आदेशः-प्रशासनमिति प्रकृत्यर्थव्याख्यानं, तत्र अकर्तरि च कारके संज्ञायामिति घञः कर्तृव्यतिरिक्तकारके विहितत्वाद् ब्रह्मणश्च प्रशासने कर्तृत्वादुपदेशकर्मत्वोपपत्तेश्च प्रकृत्यर्थः उपदेशः प्रत्ययार्थः कर्म चेति परैर्व्याख्यातं तत्र प्रकृत्यर्थास्वारस्यं, प्रत्ययार्थस्वारस्यम्, अस्मत्पक्षे प्रकृत्यर्थस्वारस्यं प्रत्ययार्थास्वारस्यं कर्तृव्यतिरिक्तकारकविषयस्य घञः कथं कर्त्रर्थत्वं विवक्षातः कारकाणि भव-

(१) स्पाष्टयार्थमाहेति पा० ।

न्तीति न्यायेन कर्तुरेव करणान्तरनिरपेक्षत्वलक्षणेन करणसाधर्म्यरूपेण साधकतमत्वेन करणत्वविवक्षया घञ्प्रत्यय उपपद्यते, एतदभिप्रायेण हि आदिश्यतेऽनेनेत्युक्तं न त्वादिशतीति, विवक्षया कारकप्रवृत्तिश्चेदकर्त्तरीति विधानस्य किं प्रयोजनं स्वतः प्राप्तस्य(१) कर्तृव्यतिरिक्तकारकस्य कर्तरि करणत्वादिविवक्षया कर्त्रर्थत्वमस्वरसमिति विभागः प्रयोजनं सूत्रस्य प्रयोजनवत्त्वेऽपि स्वारस्यमस्वारस्यं च तुल्यं चेत् किमनेन-योजनान्तरेणेति चेत् उच्यते परपक्षे प्रत्ययार्थस्यैव स्वारस्यमस्मत्पक्षे तु स्वारस्यद्वयमस्ति अर्थस्वारस्यं शब्दस्वारस्यं चेति प्रकृत्यर्थस्वारस्यं तावत् सिद्धं विवक्षितविशेषणस्यासाधारणाकाराभिधानं स्वतः प्राप्तं सर्वप्रशासितृत्वं ब्रह्मासाधारणधर्म्मः, उपदेश्यत्वं तु कर्म्मस्वरूपादेः साधारणं किंचापेक्षितविधेरनपेक्षितविधानं दुर्बलमिति न्यायादत्रावश्यापेक्षितप्रशासितृत्वज्ञापनमेव युक्तं नानपेक्षितोपदेश्यत्वज्ञापनं तस्माच्छब्दस्वारस्यमर्थस्वारस्यं चेति स्वारस्यद्वयविभवादयमेवार्थः। ब्रह्मणः कृत्स्नप्रशासितृत्वे सिद्धे हि तदत्रासाधारणाकारतया वक्तव्यं तत्र किं प्रमाणमित्यत्राह एतस्य वा इति, ।

तथा च मानवं वचः प्रशासितारं सर्वेषा(२)मित्यादि, अत्राप्येकमेवेति जगदुपादानतां प्रतिपाद्य अद्वितीयपदेनाधिष्ठात्रन्तरनिवारणादस्यैवाधिष्ठातृत्वमपि प्रतिपाद्यते, अतस्तं प्रशासितारं जगदुपादानभूतमपि पृष्टवानसि येन श्रुतेन मतेन विज्ञातेनाश्रुतममतमविज्ञातं श्रुतं मतं विज्ञातं भवति इत्युक्तं स्यात्, निखिलजगदुदयविभवविलयादिकारणभूतं सर्वज्ञत्व-सत्यकामत्व-सत्यसंकल्पत्वाद्यपरिमितोदारगुणसागरं किं ब्रह्म त्वया श्रुतमिति हार्दो भावः,

(१) स्वतः प्राप्तत्वमिति पा० । (२) मनुस्मृ० । १२ । १२२ ।

स्मृतिमाह प्रशासितारमिति, न केवलं श्रुत्यन्तरेष्वेव प्रशासितृत्वप्रसिद्धिः अस्मिन्प्रकरणेऽपि सिद्धमित्याह अत्रापीति, अधिष्ठातृत्वं हि प्रेरकत्वं तच्च प्रशासितृत्वमिति तत्फलितमित्यर्थः, एवमादेशशब्दार्थ उक्तः । अथ तच्छब्दं च विवृण्वन्वाक्यार्थं च योजयति अत इति, येन विज्ञातं भवति तं पृष्ठवानसीत्यन्वयः। येन श्रुतेन मतेन विज्ञातेनेत्यध्याहारेण योजनायाः को हेतुः उच्यते, न हि ब्रह्मणः सत्तया कृत्स्नं ज्ञातं भवति अपि तु तद्विज्ञानेनैव विज्ञातं भवतीति वस्तुसामर्थ्यात् । किंच दृष्टान्तेऽपि न हि मृत्पिण्डसत्तया घटादिर्विज्ञातो भवति अपि तु तद्विज्ञानेनेति दृष्टान्तसामर्थ्यात् । किंच आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञातं स्यात् कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति इत्यादिश्रुत्या च, एवं दृष्टान्तसामर्थ्यात् दार्ष्टान्तिकसामर्थ्याच्च श्रुत्यन्तरकण्ठोक्त्या चैवं व्याख्यातमित्युक्तं स्यादिति कण्ठोक्त्या चाभिप्रेततया चायमेवास्याः श्रुतेरर्थ इत्यभिप्रायः । नन्वस्मिन्वाक्य उपादानत्व हि न कण्ठोक्तं किं तु फलितं कारणत्वं ज्ञातत्वं च न कण्ठोक्तम् अत्र जगत्कारणत्वाद्यभिप्रायस्य किं प्रयोजनमित्यपेक्षायामाह निखिलजगदिति, श्रुत्यन्तरेषु यतो वा इमानि इत्यादिवाक्येषु जगत्कारणत्वलक्षणकं ब्रह्मावगतं तस्मादत्र जगत्कारणत्वगर्भं वदतः पितुस्त्वया किं ब्रह्म श्रुतमित्यभिप्राय इत्यर्थः ।

तस्य निखिलकारणतया कारणमेव नानासंस्थानविशेषसंस्थितं कार्य्यमित्युच्यत इति कारणभूतसूक्ष्मचिदचिद्वस्तुशरीरकब्रह्मविज्ञानेन कार्यभूतमखिलं जगद्विज्ञातं भवतीति हृदि निधाय येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं स्यादिति पुत्रं प्रति पृष्टवान् पिता, तदेतत् सकलस्य वस्तुजातस्यैककारणत्वं पितृहृदि निहितमजानन्पुत्रः परस्परविलक्षणेषुवस्तुष्वन्यस्य विज्ञानेन तदन्यविज्ञानस्याघटमानतां बुद्ध्वा

अप्राक्ष्य इति प्रश्नोक्तिः तत्पूर्वकश्रवणाभिप्रायेणेत्यभिप्रायवानाह त्वया श्रुतमिति, नात्र ब्रह्मेति कण्ठोक्तं, तस्मात जगत्कारणत्वान्तर्भावप्रयोजनब्रह्मश्रवणप्रश्नः कृतो भवतीति सर्वज्ञत्वादिगुणाःकारणत्वोपयोगितयोक्ताः सृष्ट्यादयः परिपूर्णस्यैव लीलाः, अतस्सत्यकामत्वस्य कारणत्वोपयोगः । हार्दोभावः—हृदि निहितं तात्पर्यमित्यर्थः । कारणत्वे सत्यप्येकविज्ञानेनसर्वविज्ञानं नोपपद्यते कारणात्कार्यस्य द्रव्यान्तरत्वात्कारणत्वं च नोपपद्यते तथा सति ब्रह्मणोऽहेयास्पदत्वप्रसङ्गात्कारणत्वोपपत्तावप्येकविज्ञानेन सर्वविज्ञानं नोपपद्यते नानाजातीयकार्याणां नानजातीयकारणकत्वदर्शनादित्यत्राह तस्येति, तस्य निखिलकारणतया कार्यभूतमखिलं जगद्विज्ञातं भवतीत्यन्वयः। कारणात्कार्यस्यानन्यत्वमाह कारणमेवेति, नानासंस्थानविशेषसंस्थितं—संस्थानविशेषविशिष्टमित्यर्थः । सूक्ष्मचिदचिद्वस्तुशरीरशब्देन ब्रह्मणोऽहेयास्पदत्वप्रसङ्गः परिहृतः । निर्वेदादुपसन्नाय वक्तव्यमर्थं स्वयमेव कथं वदतीत्यत्राह पुत्रं प्रति पृष्टवान् पितेति, पुत्रव्यतिरिक्तानां शुश्रूषाद्यपेक्षा पुत्रस्य तु पुत्रत्वमेव ब्रह्मोपदेशहेतुरिति शास्त्रार्थः सूचितः । पुत्रपितृशब्दाभ्यामुद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच तं ह पितोवाचेति श्रुतिवाक्यं स्मारितम्, अनन्तरमिदं वाक्यं कथं नु भगवस्स आदेश इति इदं किं प्रश्नरूपम् ? उत चोद्यरूपमिति संशये चोद्यपरमिति व्याचष्टे तदेतदित्यादिना, प्रतिवचनप्रकारेण प्रश्नार्थो विज्ञायते प्रतिवचने यथा सोम्यैकेनेत्यादिना दृष्टान्तैरुपपादनादिदं चोद्यरूपमित्यभिप्रायः । परिचोदयति इति—विवक्षितविशेषकण्ठोक्तिमकुर्वत् सामान्येन चोदयतीत्यर्थः ।

परिचोदयति कथं नु भगवः स आदेश इति परिचोदितः पुनस्तदेव हृदि निहितं ज्ञानानन्दामलत्वैकस्वरूपमपरिच्छेद्यमाहात्म्यं सत्यसंकल्पत्वमिश्रैरनवधिकातिशयासंख्येयकल्याणगुणगणैर्जुष्टमविकारस्वरूपं परं ब्रह्मैव नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरं स्वलीलयैव स्वसं-

